॥ श्रीः ॥

* हरिदास-संस्कृत-सीरिज़ *

१६



ग्रन्थाङ्कः

श्रीकृष्णयज्वकृता

# मीमांसापरिभाषा।

म. म. पण्डित पर्वतीयनित्यानन्दपन्तविरचितया

लघुटिप्पण्या सहिता।



प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी।

१९८०.

# अस्मत् प्रकाशित परीक्षोपयोगिपाठ्यपुस्तकानां
# संक्षिप्त सूचीपत्रम्

१ सिद्धान्तकौमुदी । सभाष्य शिक्षाऽष्टाध्यायीगणवार्त्तिक धातुपरिभाषोणादिसू फिट्सूत्रलिङ्गानुशासनसूत्रपाठैः सहिता । अष्टाध्याय्यष्टकाकाराद्यनुक्रमसूचि संवलिता । मूलमात्र गुटका । आजतक जितनीभी कौमुदी अन्य प्रकाशकों के य छपी हैं उनमें इतने परिशिष्ट विषय किसीमें भी नहीं हैं । इन परिशिष्ट विषयों विद्यार्थियों को बड़ा लाभ पहुंचा है । सबसे सस्ता संस्करण मूल्य लागतमात्र

२ मुक्तावली । न्यायव्याकरणाचार्य पं० श्रीसूर्यनारायणशुक्लरचित मयूख टी सहित । आज तक मुक्तावली पर जितनी टीका टिप्पणी छपी हैं उन सबसे उत्त यह नवीन ढङ्गकी सरलटीका विद्यार्थियोंके अत्यन्त उपयोग की हुई है ।
संपूर्ण ग्रन्थ का मूल्य १

प्रत्यक्षखण्डान्तः प्रथमोभागः ॥=)अनुमानशब्दखण्डात्मक द्वितीयोभागः ॥

३ कारिकावली । मुक्तावली न्यायचन्द्रिका टीका द्वय सहित सटिप्पण । मूल्य

४ कारिकावली । मु० दिन० रामरुद्री शब्दखण्ड सहिता तथा गुणनिरूपण दिन रीय म० म० पं० श्रीलक्ष्मणशास्त्रि कृत व्याख्या सहिता । सम्पूर्ण मूल्य

५ शिशुपालवधम् । म० म० मल्लिनाथकृत सर्वङ्कषाव्याख्या तथा वल्लभदेवकृ सन्देहविषौषधिव्याख्या सहितः । २ टीका सहित संपूर्ण ग्रन्थ का मूल्य लाग
मात्र सजिल्द संस्करण ग्लेज् कागज का

६ अर्थसंग्रहः । परीक्षोपयोगि संस्कृतटीकाटिप्पणी सहितः । मूल्यलागत मात्र ॥

७ शुक्लयजुर्वेदसंहिता । उव्वट-महिधरभाष्य सहिता । स्थूलाक्षर ४भागमेंसंपूर्ण

८ पाणिनीयशिक्षा । पञ्जिकाभाष्य सहित । पं० गोपालशास्त्री नेने व्याकरणाच कृत टिप्पणी सहित । मूल्य

९ प्रौढमनोरमा । शब्दरत्नभैरविव्याख्या सहिता । श्रीयुत पं०माधवशास्त्रीभाण्ड विरचित प्रभानामक टिप्पणी तथा अव्ययीभावप्रकरणपर श्रीयुतपं० जगन्नाथशा विरचित शब्दरत्नप्रदीप नामक टिप्पणी सहित । अव्ययीभावान्तः मूल्य

१० वैयाकरणभूषणसारः । परीक्षोपयोगि सपरिष्कृत दर्पण व्याख्या सहितः त काशिस्थराजकीय संस्कृतपाठशालाध्यापक व्याकरणाचार्य फड़के इत्युपनाम पण्डित अनन्तशास्त्रिणा विरचितया परीक्षोपयोगि दर्पणपरिशिष्ट सहितः
नवीनावृत्तिः । मू० ३

११ वैयाकरणभूषणसारः । सरलाव्याख्या सहितः । १

१२ परिभाषेन्दुशेखरः । परीक्षोपयोगि भैरवि—तत्त्वप्रकाशिका व्याख्याद्वयोपेत सटिप्पण । मूल्य २

१३ व्याकरण महाभाष्यम् । म० म० श्रीकैयटोपाध्याय-नागोजीभट्टाभ्यां प्र ताख्य विवरणाभ्यां समुल्लसितम् नवाह्निक पर्यन्तम् । प्रथमाध्याय दादि समाप्तिपर्यन्तं म० म० श्रीकैयटवि[illegible] दीप [illegible] तम

THE

HARIDAS SANSKRIT SERIES.

19.

---

THE

# MĪMĀṂSĀ PARIBHĀS'Ā

By

*S'ri Kris'nayajva*

*With Notes by*

M. M. PANDIT S'RI NITYANANDA PANTA PARVATIYA

*Edited by*

PANDIT S'RĪ ANANTA S'ĀSTRĪ PHAḌAKE,

Professor, Govt. Sanskrit College, Benares.

---

PRINTED—PUBLISHED & SOLD BY

JAI KRISHNA DÂS HARIDÂS GUPTA

*The Chowkhamba Sanskrit Series Office,*

*Benares City.*

---

1932.

* श्रीः *

* हरिदास संस्कृत सीरिज़ *

१६

* श्रीः *

श्रीकृष्णयज्वकृता

# मीमांसापरिभाषा ।

म. म. पण्डित पर्वतीयनित्यानन्दपन्तविरचितया

लघुटिप्पण्या सहिता ।

काशिस्थराजकीयप्रधानसंस्कृतपाठशालाध्यापकेन फडके इत्युपनामक-

अनन्तशास्त्रिणा व्याकरणाचार्यमीमांसातीर्थेन

संशोधिता ।

प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी ।

१९८९.

श्रीगणेशाय नमः ॥

# मीमांसापरिभाषा ।

सूर्यनारायणं वन्दे देवीं त्रिपुरसुन्दरीम् ।
गुरूनधिगतार्थांश्च निरन्तरमहं भजे ॥ १ ॥
बालानां शास्त्रसिद्धार्थक्लेशबोधाय धीमताम् ।
मीमांसापरिभाषेयं क्रियते कृष्णयज्वना ॥ २ ॥

इह खलु महर्षिणा जैमिनिना द्वादशलक्षण्यां पूर्व्वमीमांसायां धर्म्माधर्म्मावेवानुष्ठानोपयोगितया विचारितौ । तत्र वेदबोधितेष्टसाधनताको(१) धर्म्मः । यथा यागादिः ।

---

(१) धर्माधर्मयोर्लक्षणं इष्टसाधनत्वानिष्टसाधनत्वमात्रोक्तौ अन्नभक्षणविषभक्षणादौ अतिव्याप्तिः । वेदबोधितत्वमात्रोक्तौ स्वर्गनरकादावतिव्याप्तिः । धर्मलक्षणे वेदविहितत्वोपादानेऽपि 'अग्नीषोमीयवपायां हुतायां दीक्षितान्नमश्नीयात्' इत्याद्यभ्यनुज्ञाविषये दीक्षितान्नाशनादौ अतिव्याप्तिः । एवमधर्मलक्षणे वेदनिषिद्धत्वरूपे स्वीक्रियमाणे "अतिरात्रे षोडशिनं न गृह्णाति" इति निषिद्धे षोडशिग्रहणे अतिव्याप्तिः । इष्टसाधनत्वनिवेशे तु न दोषः । "न दीक्षितान्नमश्नीयात्" इत्यनेन दीक्षितान्नाशनस्यानिष्टसाधनत्वे बोधिते 'अश्नीयात्' इत्याद्यभ्यनुज्ञाविधिना दोषाभावमात्रस्यैव बोधनेन इष्टसाधनत्वानाक्षेपात्–रागप्राप्तेष्टसाधनताकस्यापि दीक्षितान्नाशनाविवाहानृतवदनादेः वेदबोधितेष्टसाधनताकत्वाभावात् । श्येनादेस्तु वेदबोधितेष्टसाधनताकत्वाभावात धर्मत्वमेव । तत्फलस्य वैरिमरणानुकुलशस्त्रघातादिरूपहिंसात्मकस्याभिचारस्यैव तु अधर्मत्वम् । तस्यैव "न हिंस्यात्" इत्यनेन अनिष्टसाध-

वेदबोधितानिष्टसाधनताकोऽधर्म्मः । यथा कलञ्जभक्षणादिः । तयोश्च वेदः, स्मृतिः, आचारश्च प्रमाणम् । तत्र वेदः स्वतन्त्रं प्रमाणम्, इतरौ तु वेदमूलकतया । तत्र वेदो द्विविधः—मन्त्ररूपो ब्राह्मणरूपश्चेति । तत्र प्रयोगकालीनार्थस्मरणहेतुतया मन्त्राणामुपयोग इति वक्ष्यते । प्रयोगोऽनुष्ठानं तत्कालीनेत्यर्थः । विधायकं वाक्यं ब्राह्मणम् । तच्छेषोऽर्थवादः । तस्य विधेयप्राशस्त्यप्रतीतिजननद्वारा विधिवाक्यैकवाक्यतया प्रामाण्यमिति वक्ष्यते ।

तच्चानेकविधम्—कर्मोत्पत्तिवाक्यम्, गुणवाक्यम्, फलवाक्यम्, फलाय गुणवाक्यम्, सगुणकर्मोत्पत्तिवाक्यमित्यादिभेदात् ।

तत्र येन वाक्येन—'इदं कर्म्म कर्त्तव्यम्' इति बोध्यते तत् कर्मोत्पत्तिवाक्यम् । यथा—"अग्निहोत्रं जुहोति" इति । अत्राग्निहोत्रहोमः कर्त्तव्यतया विधीयत इति कर्मोत्पत्तिवाक्यमिदम् ।

विहिते कर्म्मणि तदङ्गतया द्रव्यदेवतादिविधायकं वाक्यं गुणवाक्यम् । यथा—"दध्ना जुहुयात्" इति । अत्र होममुद्दिश्याङ्गतया दधि विधीयते इति गुणवाक्यमिदम् । कर्म्मा-

---

न्तरबोधनात् । अत एवं तामसधर्मेषु श्येनादेरुपादानं सङ्गच्छते । एवं 'नातिरात्रे' इति वाक्येन षोडशिग्रहणस्य अनिष्टसाधनत्वं न बोध्यते किन्तु तद्विनाऽपि इतराङ्गैः क्रतोः पूर्णत्वमेव । अत एव कष्टात्मके तस्मिन् पुरुषनिवृत्तिरुपपद्यते । तत्र प्रवृत्त्यर्थं च ग्रहणविधिना फलाधिक्याक्षेपः । अतः फलाधिक्यकामस्य तत्र प्रवृत्तिरिति दिक् ।

ङ्गतया विहितत्वमेव दध्यादेर्गुणत्वम् । अत्र होमस्योद्देश्यत्वं नाम मानान्तरप्राप्तत्वे सति विधेयान्वयितया निर्देश्यत्वम् । तस्यैव मानान्तरप्राप्तस्य पुनः कथ्यमानरूपत्वमनुवाद्यत्वम्, दध्यादिगुणान्वयितया प्राधान्यञ्च । दध्यादेर्मानान्तराप्राप्तत्वादत्रैव विधेयत्वम्, होमसाधनत्वाच्च होमापेक्षया गुणत्वम्, पुरुषेणानुष्ठीयमानत्वाच्चोपादेयत्वञ्च। अत्र मानान्तरप्राप्तत्वं मानान्तरज्ञातत्वम्, अप्राप्तत्वञ्चाज्ञातत्वमिति बोध्यम् ।

उत्पन्नस्य कर्म्मणः फलाकाङ्क्षायां फलसम्बन्धबोधको विधिः फलविधिः । यथा "अग्निहोत्रं जुहुयात् स्वर्गकाम" इति ।

अत्र 'यः स्वर्गं कामयते स तत्साधनत्वेनाग्निहोत्रनामकं होमं भावयेत्–कुर्यात्' इति अग्निहोत्रवाक्योत्पन्नस्य कर्म्मणः फलसम्बन्धो बोध्यत इति फलवाक्यमिदम् ।

प्राप्तं कर्म्माश्रित्य फलाय गुणविधौ फलाय गुणवाक्यम् । यथा "दध्नेन्द्रियकामस्य जुहुयात्" इति । अत्राग्निहोत्रवाक्योत्पन्नं होममाश्रित्येन्द्रियफलाय दधिरूपो गुणो विधीयते–'होमाश्रितेन दध्ना इन्द्रियरूपं फलं भावयेत्' इति । होमाश्रितेन होमकारकीभूतेनेत्यर्थः । अयमेव गुणफलविधिः गुणकामविधिरिति च उच्यते ।

द्रव्यदेवतादिगुणविशिष्टकर्म्मविधायकं वाक्यं सगुणकर्मोत्पत्तिवाक्यम् । यथा–"सोमेन यजेत" इति । अत्र सोमलताविशिष्टो यागो विधीयते । विशिष्टविधावपि

विशेषणस्य अर्थाद्विधिः ।

क्वचित् कर्मोत्पत्तिवाक्यमेव फलसम्बन्धबोधकमपि भवति । यथा—"उद्भिदा यजेत पशुकाम" इति । अत्रोद्भिन्नामको यागो वाक्यान्तराविहित एव पशुकामस्य पशुफलाय विधीयते इत्येकमेवेदं वाक्यं फलसाधनयागविधायकम् ।

प्रधानविधिरेवाङ्गविधिभिरेकवाक्यतया महावाक्यतामापन्नः सन् सर्व्वाङ्गविशिष्टप्रधानप्रयोगविधायकत्वात् प्रयोगविधिरित्युच्यते । यथा "अग्निहोत्रं जुहुयात् स्वर्गकाम" इति । अत्र 'अग्निहोत्रहोमेन स्वर्गं भावयेत्' इत्यर्थः प्रतीयते । भावयेत्—उत्पादयेत् इति यावत् । अत्र 'कथमनेन होमेन स्वर्गं कुर्य्याद्' इति कथम्भावाकाङ्क्षा जायते । यथा 'कुठारेण द्वैधीभावं कुर्यात्' इत्युक्ते भवत्याकाङ्क्षा 'कथमनेन 'द्वैधीभावं कुर्याद्' इति । तत्रोद्यमननिपतनादिसहायेन इति गम्यते । तद्वदत्रापि "अग्निं प्रणयति" अग्निषु समिध आदधाति" इत्याद्यङ्गविधिविहितप्रणयनसमिदाधानायतनशोधनादिकाङ्गकलापजनितोपकारसहितेन अग्निहोत्रहोमेन स्वर्गं कुर्यात् इति प्रकरणकल्पितेन होमवाक्येन स्वर्गाय साङ्गाग्निहोत्रप्रयोगो विधीयते इत्येतादृशः प्रयोगविधिः । अङ्गजातमेवेत्थम्भाव इति, इतिकर्त्तव्यता इति च उच्यते । अत्राग्निहोत्रहोमः प्रधानं प्रणयनादिकं सर्व्वम् अङ्गम् ।

ननु इदमनुपपन्नम् । आशुतरविनाशिनां कर्म्मणां का-

लान्तरभाविस्वर्गादिफलसाधनत्वानुपपत्तेरिति चेन्नैवम् । निषिद्धिकर्म्मणां तत्तद्वाक्यैस्तत्तत्फलसाधनत्वेऽवगते आशुतरविनाशिनां कर्म्मणां कालान्तरभाविफलसाधनत्वोपपत्त्यर्थमन्तरा पुण्यपापरूपमपूर्वं कल्प्यते । ततश्च यागादेरपूर्वद्वारा स्वर्गसाधनत्वं, न साक्षात् । तदेव फलापूर्वम् । तत्करणत्वञ्च प्राच्योदीच्याङ्गविशिष्टस्य प्रधानस्य भवति, न प्रधानमात्रस्य । प्रधानमात्रादेव फलापूर्वजनने फलस्यापि तत एव सिद्धेरङ्गानामानर्थक्यापत्तेः ।

ननु सर्व्वाङ्गविशिष्टस्यापूर्वजनकत्वमुक्तम् । तच्चाशुतरविनाशिनः प्रधानस्याङ्गसाहित्याभावान्न सम्भवतीति चेन्न । प्रधानकर्म्मणः स्वरूपेणाङ्गसाहित्याभावेऽपि उत्पत्त्यपूर्वद्वारा साहित्यसम्भवात् । प्रधानस्य सर्वाङ्गसाहित्यसिद्ध्यर्थं प्रधानकर्म्मपरमापूर्वयोर्मध्ये प्रधानमात्रजन्यमुत्पत्तिनामकं किञ्चिदपूर्वमस्तीत्यङ्गीकारात् । एवमङ्गानामपि परस्परसहितानामेव प्रधानोपकारकत्वात्तेषां स्वरूपेण साहित्याभावात् तत्तदुत्पत्त्यपूर्वद्वारा साहित्यं बोध्यम् । अङ्गानां प्रधानोपकारकत्वं नाम प्रधानस्य फलापूर्वजननसामर्थ्योन्मुखीकरणमेव । दर्शपूर्णमासयोस्तु विशेषः । "यदाग्नेयोऽष्टाकपालोऽमावास्यायाञ्च पौणमास्याञ्चाच्युतो भवति" इत्याग्नेययागो विहितः, "ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छद्" इत्यग्नीषोमीययागो विहितः, "उपांशुयाजमन्तरा यजति" इति उपांशुयागः "तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौणमास्यां यजन्" इति वा-

क्यात् पौर्णमास्यां विहितः । एतानि पौर्णमास्यां प्रधानानि । एषामाग्नेयाग्नीषोमीयोपांशुयागानां तत्तद्वाक्यावगतपौर्णमासीकालसम्बन्धं निमित्तीकृत्य "य एवं विद्वान् पौर्णमासीं यजते" इति विद्वद्वाक्ये पौर्णमासीपदेन एकवचनान्तेन समुदायरूपेणानुवादः । तेन वेदे यत्र यत्र पौर्णमासीशब्दः तत्र तत्राग्नेयादिसमुदायोपस्थितिः ।

ननु "यदाग्नेय" इति वाक्ये यागवाचकपदस्याश्रवणात् कथं यागविधायकत्वमिति चेन्मैवम् । अग्निर्देवता अस्य पुरोडाशस्य इत्यर्थे विहितदेवतातद्धितान्त आग्नेयशब्दः । तस्य पुरोडाशपदसामानाधिकरण्याद्द्रव्यदेवतासम्बन्धोऽवगतः । स यागमन्तरा न सम्भवति, द्रव्यदेवतासम्बन्धस्य यागादन्यत्र क्रियायामसम्भवात्, यागक्रियायामेव सम्बन्धो वाच्यः । देवतोद्देशेन द्रव्यत्यागस्य यागरूपत्वाङ्गीकारात् । अतः श्रुतद्रव्यदेवतासम्बन्धानुमितो यागो यजेतेति कल्पितेन पदेन विधीयते—अग्निदैवत्यपुरोडाशद्रव्यकामावास्यादिकालकर्त्तव्ययागेन इष्टं भावयेदिति । एवं यत्र यत्र द्रव्यदेवतासम्बन्धमात्रं श्रूयते, "सौर्य्यञ्चरुं निर्वपेत्" इत्यादौ, तत्र सूर्यदेवतादिसम्बन्धानुमितो यागो विधीयते इति न कश्चिद्दोषः ।

ननूपांशुयागवाक्ये यजेः श्रवणेऽपि विधिप्रत्ययलिङादेरभावात् कथं विधायकत्वमिति चेन्मैवम् । यजतीत्यस्य यजेतेति विपरिणामेन विधायकत्वसम्भवात् । एवं "व्रीहीन् प्रोक्षति" "समिधो यजेति" इत्यादावपि विप-

रिणामो बोध्यः।

केचित्तु यजतीत्यस्य पञ्चमलकारत्वाङ्गीकारात् विधायकत्वसरुभव इत्याहुः।

तथा—"ऐन्द्रं दध्यमावास्यायाम्" "ऐन्द्रं पयोऽमावास्यायाम्" इतिवाक्यविहितौ सान्नाय्ययागौ, "यदाग्नेय इति वाक्यविहिताग्नेयश्चामावास्यायां प्रधानानि(१)।

एषां त्रयाणां "य एवं विद्वानमावास्यां यजते" इति वाक्ये अमावास्यामिति नाम्ना द्वितीयैकवचनान्तेन समु-

---

(१) इमानि च प्रधानानि तैत्तिरीयेषु हिरण्यकेश्यादीनां सोमेनेष्टवतामनुष्ठेयानि बोध्यानि। सोमेनानिष्टवतां तेषां तु उक्तसान्नाय्ययागयोः स्थाने ऐन्द्राग्नपुरोडाशयाग एवानुष्ठेयः। उपांशुयागो हिरण्यकेश्यादीनां नास्त्येव अत एव 'विष्णुमुपांश्वैतरेयिणोऽग्नीषोमीयं पौर्णमास्यां वैष्णवममावास्यायामेषामेके कश्चन नैषामप्युपांशूनाम्' इति श्रौतसूत्रे आश्वलायनेन हिरण्यकेश्यादीनुद्दिश्य 'एके' इति प्रयुञ्जानेन तेषामुपांशुयागाभावः स्पष्टमेवोक्तः। तैत्तिरीयेषु बौधायनानान्तु पौर्णमासेऽग्नीषोमीयपुरोडाशयागानुष्ठानं नास्ति। अत एव दशमाध्यायेऽष्टमपादेऽन्ति-(१८) माधिकरणे पौर्णमासेऽग्नीषोमयागाभावे 'उपांशुयाजमन्तरा यजति' इति वाक्येन उभयोः पुरोडाशयोरन्तराले विहित उपांशुयागः कथमनुष्ठेयः स्यादित्याशङ्क्यान्तरालस्याग्नेययागोपलक्षकत्वमङ्गीकृत्य तत्र तदनुष्ठानमिति सिद्धान्तितम्। कात्यायनाश्वलायनादीनां तु आग्नेयः, उपांशुयागः, अग्नीषोमीयः पुरोडाश इति त्रिकं पौर्णमास्याम्—आग्नेयः, उपांशुयागः, ऐन्द्राग्नश्चेति त्रिकं चामावास्यायाम्। ततश्च कात्यायनादिसम्प्रदायमेव दृष्ट्वा उपांशुयागाभावो दर्शे कथं स्यादिति भ्रमो न कार्य इति दिक्।

दायरूपेणानुवादः । तेन वेदे यत्र दर्शशब्दोऽमावास्याशब्दो वा श्रुतस्तत्र यागसमुदायोपस्थितिः । त्रिकस्य त्रिकस्यामावास्यापौर्णमासीशब्दाभ्यां समुदायरूपेण विद्वद्वाक्येऽनुवादस्य प्रयोजनन्तु "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादौ द्विवचनोपपत्तिः । अन्यथा षण्णामाग्नेयादियागानां बहुत्वाद्दर्शपूर्णमासैरिति बहुवचनं न स्यात् । मानान्तरेण प्राप्तार्थस्य पुनःश्रवणमनुवादः ।

तथा फलवदाग्नेयादिसन्निधौ आम्नातानि प्रयाजाज्यभागानुयाजादीनि षण्णां यागानामङ्गभूतानि ।

एवं स्थिते "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यस्यायमर्थः—दर्शपूर्णमासाभ्यां समुदायाभ्यां परस्परसहिताभ्यां स्वर्गापूर्वं कुर्यादिति । तत्र कथंकालद्वयवर्त्तिनोःसमुदाययोः परस्परसाहित्यमित्याकाङ्क्षायां स्वरूपेण साहित्याभावेऽपि त्रिकात्रिकादेकैकमपूर्वं जायते तद्द्वारा द्वयोः समुदाययोः साहित्यमुच्यते । एकैकस्य त्रिकस्यापि त्रिकापूर्वजनकत्वं कथमित्याकाङ्क्षायां प्रयाजानुयाजादिपूर्वोत्तराङ्गकलापविशिष्टस्य एकैकस्य त्रिकस्य समुदायापूर्वजनकत्वमुच्यते । एकैकत्रिकस्य सर्वाङ्गसाहित्यं स्वरूपेण न सम्भवतीति त्रिभिर्यागैस्त्रीण्युत्पत्त्यपूर्वाणि जायन्ते तद्द्वारा सर्वाङ्गसाहित्यम् । अङ्गानामपि प्रयाजादीनां स्वरूपेण प्रधानसाहित्याभावात् तत्तदुत्पत्त्यपूर्वद्वारा साहित्यं वाच्यम्, तथा च प्रधानजन्योत्पत्त्यपूर्वाणां प्रयादिजन्योत्पत्त्यपूर्वैः साहित्यं यदस्ति तदेव प्रधानानामङ्गविशिष्टत्वरूपं साङ्ग-

त्वम्। एवञ्च पौर्णमास्यामाग्नेयादिजन्यैस्त्रिभिरपूर्वैः प्रया-जादिजन्योत्पत्त्यपूर्वसचिवैः समुदायापूर्वमेकं जन्यते, तथा दर्शेऽपि आग्नेयेन्द्रद्वयजन्यैस्त्रिभिरपूर्वैरङ्गोत्पत्त्यपूर्वसचिवैरेकं त्रिकापूर्वं जन्यते, ताभ्यां त्रिकापूर्वाभ्याम् आग्नेया-द्युत्पत्त्यपूर्वत्रितयजन्याभ्यां फलजनकीभूतं महापूर्वं फला-पूर्वनामकं जन्यते, ततश्च फलमिति। तथा च सर्वाङ्गो-पकृताभ्यां दर्शपूर्णमासाभ्यामपूर्वद्वारा स्वर्गं कुर्यादिति फलापूर्वनिष्पत्तये साङ्गप्रधानकर्त्तव्यताबोधको विधिः प्रयोगविधिरिति सिद्धम्।

पुनरपि विधिस्त्रिविधः। अपूर्वविधिः नियमविधिः, परिसङ्ख्याविधिश्चेति। तत्र यो विधिरत्यन्ताप्राप्तमर्थं प्रा-पयति सोऽपूर्वविधिः। यथा दर्शपूर्णमासप्रकरणे "व्रीहीन् प्रोक्षति" इति। एतद्विध्यभावे दर्शपौर्णमासीयव्रीहिषु प्रोक्षणं कथमपि न प्राप्नोति। एतद्विधिसत्त्वे तु तत्सम्ब-न्धिव्रीहिषु प्रोक्षणं प्राप्नोत्येव इति अत्यन्ताप्राप्तप्रोक्षणप्रा-पकत्वादयमपूर्वविधिः।

यश्च पक्षे प्राप्तमर्थं नियमयति स नियमविधिः। यथा तत्रैव "व्रीहीनवहन्ति" इति। एतद्विध्यभावे दर्श-पौर्णमासिकेषु व्रीहिषूत्पत्तिवाक्यावगतपुरोडाशोपयोगित-ण्डुलनिष्पत्त्यनुकूलवैतुष्यकार्याय अवहननवत् कदाचिन्न-खविदलनमपि प्राप्नुयात् इति तस्मिन् पक्षेऽवहननस्य प्राप्तेरभावात् कार्यान्यथोपपत्तेरवहननस्य पाक्षिकी प्राप्तिः स्यात्। सति त्वस्मिन् विधाववहननेनैव वैतुष्यं कार्य-

मिति नियमे सति विदलनं सर्वात्मना निवर्त्तत इति नियमविधिरयम्।

नच वैतुष्यस्य नखविदलनेनापि सम्भवात् अवहननियमो व्यर्थः प्रयोजनाभावादिति वाच्यम्। अवघातेनैव वैतुष्यकरणे किञ्चिददृष्टं जन्यते इति नियमादृष्टाङ्गीकारात्। नियमेन दृष्टकार्य्यालाभेऽपि अदृष्टस्योत्पत्तेः। तच्चापूर्वं यागोत्पत्त्यपूर्वद्वारा फलाऽपूर्वे उपयुज्यते, तेन नियमापूर्वाभावे फलापूर्वमेव नोत्पद्यते इति कल्पनान्नियमापूर्वस्य न वैयर्थ्यम्। एवं सोमादिनियमेऽपि बोध्यम्।

द्वयोः समुच्चित्य प्राप्तावितरनिवृत्तिफलको विधिः परिसङ्ख्याविधिः। यथा चयनप्रकरणे "इमामगृभ्णन् रशनामृतस्य(१) इत्यश्वाभिधानीमादत्ते" इत्यश्वरशनाग्रहणाङ्गत्वेन मन्त्रविधिः। एतद्विध्यभावेहि रशनाग्रहणप्रकाशको मन्त्रो रशनाऽऽदानप्रकाशनसामर्थ्यरूपात् लिङ्गात् अश्वरशनाऽऽदाने इव गर्दभरशनाऽऽदानेऽपि नियमेन प्राप्नुयात्। सत्यस्मिन् विधौ अनेन मन्त्रेण अश्वरशनामेवाददीत न तु गर्दभरशनाम्, सा तु तूष्णीमेव ग्राह्येति गर्दभरशनायां मन्त्रनिवृत्तिर्भवतीति द्वयोः समुच्चित्य प्राप्तावितरनिवृत्तिफलकत्वादयं परिसङ्ख्याविधिः। एवं "पञ्च पञ्चनखा भक्ष्या" इत्यादावपि बोध्यम्।

---

(१) ऋतस्य यज्ञस्य पूर्वे आयुषि यज्ञारम्भे इमां रशनाम् अगृभ्णन् गृहीतवन्त इति मन्त्रार्थः। हृग्रहोर्भश्छन्दसीति हस्य भः। पूर्वे आयुषीत्युत्तरस्थस्य पूर्वत्रानुषङ्गः।

पूर्वं दर्शपूर्णमासाङ्गत्वं प्रयाजादीनामुक्तम् । तत्राङ्गत्वबोधकप्रमाणानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याभेदेन षट् । तत्र "दध्ना जुहुयात्" इत्यत्राग्निहोत्रवाक्यप्राप्तं होमं जुहुयादित्यनेनोद्दिश्य तत्करणत्वेन तृतीयाश्रुत्या(१) दधि विधीयते इति श्रुत्या दध्नोऽङ्गत्वम् ।

लिङ्गं नाम सामर्थ्यम् । तच्च द्विविधम्—अर्थगतं शब्दगतञ्चेति । आद्यं यथा—"स्रुवेणावद्यति" इत्यवदानसामान्यशेषत्वावगमेऽपि स्रुवस्य सामर्थ्यरूपात् लिङ्गात् आज्यसान्नाय्यादिद्रवद्रव्यस्यावदानविशेषाङ्गत्वम् । स्रुवेण पुरोडाशाद्यवदानस्य कर्त्तुमशक्यत्वात् ।

शब्दगतं तु लिङ्गमर्थप्रकाशनसामर्थ्यम् । यथा-"अग्नये त्वा जुष्टं निर्वपामि" इति मन्त्रस्य निर्वापप्रकाशनसामर्थ्यरूपात् लिङ्गान्निर्वापाङ्गत्वम् । यस्य मन्त्रस्य यत्प्रकाशनसामर्थ्यं तस्य तदङ्गत्वम् ।

पदान्तरसमभिव्याहारो वाक्यम् । यथा—"इषे त्वेति छिनत्ति" इति । अत्र छेदनाङ्गत्वेन "इषे त्वा" इति मन्त्रो वाक्येन विधीयते । यद्वा "अग्नये जुष्टम्" इत्यत्रैव अग्नये जुष्टमित्यादिपदानां निर्वपामीत्यनेनैकवाक्यतापन्नत्वान्निर्वापाङ्गत्वम् ।

प्रकरणं नाम परस्पराकाङ्क्षा । यथा—"दर्शपूर्णमा-

---

(१) अङ्गत्वघटककारकत्वस्य साक्षाद्बोधकं प्रमाणं श्रुतिः इति तल्लक्षणं द्रष्टव्यम् ।

साभ्यां स्वर्गकामो यजेत" इति । अत्र दर्शपूर्णमासाभ्यां स्वर्गापूर्वङ्कुर्यादित्युक्ते भवत्याकाङ्क्षा कथमाभ्यां स्वर्गापूर्वं कर्त्तव्यमिति । तथा फलवदाग्नेयादिसान्निधौ "समिधो यजति" "तनूनपातं यजति" "आज्यभागौ यजति" इत्यादिभिः प्रयाजादयः फलरहिताः श्रुताः, तेषां स्ववाक्येषु फलाश्रवणात् भवति प्रयोजनाकाङ्क्षा किमेतेषां प्रयोजनमिति । ततश्च प्रयाजादीनां प्रयोजनाकाङ्क्षायां दर्शपौर्णमासयोः कथम्भावाकाङ्क्षायां परस्पराकाङ्क्षालक्षणेन प्रकरणेन प्रयाजादीनां सर्वेषां दर्शपौर्णमासाङ्गत्वं निश्चीयते ।

स्थानं नाम सन्निधिः । यथा सान्नाय्यपात्रसन्निधौ "शु(१)न्धध्वम्" इति मन्त्रस्य पाठात् सन्निधानात् सान्नाय्यपात्रप्रोक्षणाङ्गत्वम् ।

समाख्या संज्ञा । यथा अध्वर्युकाण्डप्रतिपादिते कर्मजाते आध्वर्यवसमाख्यावशात् अध्वर्य्योः कर्तृत्वेनाङ्गत्वम् । तथा "ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः" इत्यादिषु काम्येष्टिसमाख्यातेषु ऐन्द्राग्नादियागेषु काम्येष्टियाज्यानुवाक्याकाण्डसमाख्यावशात् "उभा वामिन्द्राग्नी" इत्यादिनां याज्यानुवाक्यात्वेन विनियोगः । विनियोगो नाम अङ्गत्वेनान्वयः ।

श्रुत्यादीनामेकत्र समावेशे पूर्वपूर्वस्य प्राबल्यम् , उ-

(१) "शुन्धध्वं दैव्याय कर्मणे देवयज्यायै" इति मन्त्रस्वरूपम् ।

त्तरोत्तरस्य दौर्बल्यम्। यथा—"कदाचन स्तरीरसि(१) इत्यैन्द्या गार्हपत्यमुपातिष्ठते" इत्यग्निहोत्रप्रकरणे श्रूयते। तत्र मन्त्रस्य इन्द्रप्रकाशनसामर्थ्यरूपात् लिङ्गात् इन्द्रोपस्थानाङ्गत्वे प्राप्ते, ऐन्द्र्या इति तृतीयाश्रुत्या गार्हपत्यमिति द्वितीयाश्रुत्या च गार्हपत्योपस्थानाङ्गत्वेन विधानात् लैङ्गिक इन्द्रोपस्थाने विनियोगो बाध्यते। श्रुतिर्हि स्वतो विनियोजिका। लिङ्गन्त्विन्द्रप्रकाशनसामर्थ्यमालोच्य 'ऐन्द्र्येन्द्रमुपातिष्ठते' इति श्रुतिकल्पनाद्वारा विनियोजकमिति वाच्यम्। तच्चात्र न सम्भवति।

यत्र श्रुतिविनियोगो नास्ति "अग्नये जुष्टं निर्वपामि" इत्यादौ, तत्र मन्त्रस्य निर्वापप्रकाशनसामर्थ्यमालोच्य 'अनेन मन्त्रेण निर्वापं कुर्यात्' इति श्रुतिकल्पनाद्वारा लिङ्गं विनियोजकं भवत्येव। श्रुतिकल्पनाप्रतिबन्धकाभावात्।

तथा "स्योनन्ते सदनं कृणोमि" "तस्मिन् सीद" इत्यत्र तस्मिन्निति तच्छब्दस्य पूर्ववाक्यार्थसापेक्षतया एकवाक्यत्वभानात् वाक्यप्रमाणेन द्वयोरेकमन्त्रत्वं भाति, लिङ्गेन भिन्नमन्त्रत्वं भाति। आद्यस्य सदनप्रकाशनसामर्थ्यात्, "तस्मिन् सीद" इत्यस्य सादनप्रकाशकत्वात्। तत्र वाक्यापेक्षया लिङ्गस्य प्राबल्यात् वाक्यं बाधित्वा लिङ्गेन "स्योनन्ते" इत्यस्य सदनाङ्गत्वम्, "त-

(१) नेन्द्र सश्चदेस्यतः नकारमपकृष्य "हे इन्द्र कदाचिदपि स्तरीः हिंसकः नासि" इत्यर्थो बोध्यः।

स्मिन् सीद" इत्यस्य सादनाङ्गत्वमिति निर्णयः ।

"स्योनं त" इत्यस्य "तस्मिन् सीद" इत्यनेनैकवाक्यत्वबलात् यथाकथञ्चित् सादनसामर्थ्यरूपं लिङ्गं कल्पयित्वा 'अनेन विशिष्टमन्त्रेण सादनं कुर्य्यादु' इति श्रुतिः कल्पनीया । सदनप्रकाशनरूपप्रत्यक्षलिङ्गेन कल्पितया 'स्योनं त इत्यनेन सदनं कुर्यादु' इति श्रुत्या "स्योनन्त" इत्यस्य शीघ्रं सदने विनियोगे सति तेनैव मन्त्रस्य नैकाराङ्क्ष्यात् वाक्यप्रमाणात् लिङ्गं कल्पयित्वा श्रुतिकल्पना प्रतिबध्यते विलम्बितत्वादिति लिङ्गेन वाक्यस्य बाधः ।

एवं वाक्येन प्रकरणस्य, प्रकरणात् क्रमस्य, क्रमात्समाख्याया बाधो वेदितव्यः । तथा श्रुत्या वाक्यादेरपि बाधः । तदेवमङ्गताबोधकप्रमाणानि श्रुत्यादीनि निरूपितानि ।

तच्चाङ्गत्वं शेषत्वं—पारार्थ्यमिति यावत् । परोद्देशेन प्रवृत्तकृतिव्याप्यत्वं पारार्थ्यम्(१) । प्रयाजादीनां दर्शपूर्णमासोद्देशेन प्रवृत्तपुरुषकृतिव्याप्यत्वात् लक्षणसङ्गतिः । दर्शादेः प्रयाजाद्युद्देशेन प्रवृत्तकृतिविषयत्वाभावा-

(१) परोद्देशेन प्रवृत्तस्य या कृतिस्तद्व्याप्यत्वम् । तच्च न कृतिसाध्यत्वम् । देशकालपुरुषादावव्याप्तेः । अतएव कृतिसमवायित्वविषयत्वादिरूपमपि न । किन्तु तादृशकृतौ कारकत्वेन विहितत्वम् । तेन न कुत्राप्यव्याप्त्यादिशङ्केति भाट्टदीपिकायां विस्तरः ।

व्याप्तिः । केवलप्रयाजानुद्दिश्य कस्यचिदपि पुरुषस्याप्रवृत्तेः ।

तान्यङ्गानि द्विविधानि सन्निपत्योपकारकाणि, आरादुपकारकाणि चेति । यान्यङ्गानि साक्षात्परम्परया वा प्रधानयागशरीरं निष्पाद्य तद्द्वारा तदुत्पन्नापूर्वोपयोगीनि तानि सन्निपत्योपकारकाणि । यथा—व्रीह्यादिद्रव्याणि, तत्संयुक्तावहननप्रोक्षणादीनि, अग्न्यादिदेवतातत्संयुक्तयाज्यानुवाक्यावचनादीनि च । अत्र प्रोक्षणादेर्व्रीहिगतातिशयद्वारा, अवहननादेस्तुषविमोकादिरूपदृष्टद्वारा, व्रीह्यादीनां पिष्टद्वारा पुरोडाशनिष्पादकत्वं, तद्द्वारा यागशरीरतदुत्पन्नापूर्व्वहेतुत्वञ्च । याज्यानुवाक्यादेर्देवतासंस्कारद्वारा तदुत्पन्नापूर्व्वोपयोगित्वञ्च । यागस्य देवतोद्देशेन द्रव्यत्यागरूपत्वात् । द्रव्यदेवते हि यागस्वरूपमिति सिद्धान्ताच्च । एतान्येव सामवायिकानीत्युच्यन्ते ।

आत्मसमवेतापूर्व्वजनकान्यारादुपकारकाणि । यथा—प्रयाजाज्यभागानुयाजादीनि । एतानि द्रव्यगतं देवतागतं वा संस्कारं न जनयन्ति, किन्त्वात्मगतमदृष्टं जनयन्ति इत्यारादुपकारकाणि ।

तत्र सामान्यतः कर्म्म द्विविधम्—अर्थकर्म्म, गुणकर्म्म चेति । तत्रात्मगतापूर्व्वजनकं कर्म्म अर्थकर्म्म । यथा—अग्निहोत्रदर्शपूर्णमासप्रयाजादिकम् ।

गुणकर्म्म संस्कारजनकम् । तच्च द्विविधम्—उपयुक्तसंस्कारकम्, उपयोक्ष्यमाणसंस्कारकञ्च । तत्र उप-

युक्तसंस्कारकं प्रतिपत्तिकर्म्म । उपयुक्तस्य आकीर्णकरस्य द्रव्यस्य विहितदेशे प्रक्षेपः प्रतिपत्तिरिति लक्षणात् । यथा इडाभक्षणकृष्णविषाणाप्रासनचतुरवत्तहोमादिकम् ।

नन्विडाभक्षणस्य प्रधानयागोपयुक्ताकीर्णकरपुरोडाशद्रव्यप्रक्षेपात्मकत्वात् प्रतिपत्तित्वं युक्तम्, होमस्य तु यागोपयुक्तद्रव्यसंस्कारकत्वाभावात् कथं प्रतिपत्तित्वम्, होमस्य यागसमानकालीनत्वेन होमसंस्कार्यस्य चतुरवत्तादेरुपयुक्तत्वाभावादिति चेद् । अत्राहुः—उपयुक्तसंस्कारमात्रं प्रतिपत्तिः, न तु प्रधानयागोपयुक्तत्वम् । तथा सति पशोर्विशसनान्तरं वपाहृदयाद्युद्धरणकालकर्त्तव्यलोहितशकृन्निरसनस्य प्रतिपत्तित्वाभावप्रसङ्गात्—यागोपयुक्तद्रव्यप्रक्षेपरूपत्वाभावात् । तथा कृष्णविषाणाप्रासनस्यापि प्रतिपत्तित्वं न स्यात्, यागाङ्गभूतकण्डूयनोपयुक्तत्वेऽपि यागोपयुक्तत्वाभावात् । अतो यत्र क्वचनोपयोगमात्रं विवक्षितम् । यत्र क्वचिदुपयोगस्त्वत्राप्यस्ति, वपाहृदयाद्युद्धरणेनोपयुक्तस्य पशोः सम्बन्धिनः शकृल्लोहितस्य आकीर्णकरस्य प्रतिपत्त्यपेक्षत्वात् ।

एवं यथाकथञ्चिदुपयोगो होमस्थलेऽप्यस्ति ।

तथाहि, प्रतिपत्तिस्त्रिधा—प्रधानोत्तरकाला, प्रधानसमकाला, प्रधानपूर्वकाला चेति । तत्र—आद्या इडाभक्षणादिका । द्वितीया होमादिका । तथाहि—दर्शपूर्णमासप्रकरणे श्रूयते—"सकृदुपस्तृणाति" "द्विर्हविषोऽवद्यति" "सकृदभिघारयति" "चतुरवत्तञ्जुहोति" । तत्र च-

तुरवत्तवाक्ये होमानुवादेन चतुरवत्तद्रव्यं तत्साधनत्वेन न विधीयते, होमस्याप्राप्तत्वेनानुवादासम्भवात् । नच यदाग्नेयवाक्याद्धोमप्राप्तिः, तद्वाक्यस्य यागविधायकत्वात् । नच यागहोमयोरभेद इति वाच्यम् । देवतोद्देशेन द्रव्यत्यागस्य यागशब्दार्थत्वात्, प्रक्षेपविशिष्टस्य यागस्य होमशब्दार्थत्वात् । तत्राग्नेयचोदनया यागस्य प्राप्तत्वेऽपि प्रक्षेपस्य शक्त्याऽप्राप्तत्वेनानुवादासम्भवात् । किन्तूपस्तरणद्विरवदानाभिघारणवाक्यैः प्राप्तं चतुरवत्तमुद्दिश्य तत्संस्कारत्वेन प्रक्षेपो जुहोतीत्यनेन विधीयते । स च संस्कारः प्रतिपत्तिरूप एव । "अग्नये जुष्टमभिघारयामि" इत्यादिनिर्देशैर्यागाङ्गभूताग्न्यादिदेवतार्थतया यथाकथञ्चिदुपयुक्तस्य पुरोडाशस्य प्रतिपत्त्यपेक्षया तदवयवद्व्यवदानकर्म्मकप्रक्षेपस्य प्रतिपत्तिकर्म्मत्वौचित्यात् ।

स च संस्कारः प्रधानसमकालः । होमो हि "वषट्कृते जुहोति" इति विधानात्—वषट्कारोत्तरक्षणे अध्वर्युकर्त्तव्यः । यागोऽपि तस्मिन्नेव क्षणे, यागस्य स्मरणार्थेन वषट्कारेण स्मारितः सन् यजमानेनानुष्ठेय इति तयोर्यौगपद्यसम्भवात् । तदिदं सर्व्वप्रदानाधिकरणवार्त्तिके स्थितम् (पू० मी० अ० ३। पा० ४। अधि० १४ सू० ३७)

प्रधानपूर्व्वकाला प्रतिपत्तिः यथा—"शकृत्सम्प्रविध्यति" "लोहितं निरस्यति" इति शकृत्सं (प्र)वेधनलोहितनिरसने । इदमपि "पशावनालम्भात् लोहितशकृतोरकर्मत्वम्"

इत्यधिकरणे (पू.मी. अ.४ पा.१ अधि.१२ सू.२१) स्थितम्।

उपयोक्ष्यमाणसंस्कारोऽप्यनेकविधः—साक्षाद्विनियुक्तसंस्कारः, साक्षाद्विनियुक्तस्य यदुपकारकं तत्संस्कारः, विनियोक्ष्यमाणसंस्कारश्चेति। तत्र आद्यो यथा—"व्रीहीनवहन्ति" इत्यादिः "व्रीहिभिर्यजेत" इत्यादिवाक्यविनियुक्तव्रीहीणामवहननसंस्कारः। द्वितीयो यथा—"वत्समालभेत" इति। दोहाङ्गत्वेन साक्षाद्विनियुक्तस्य गोद्रव्यस्य उपकारको यो वत्सः तत्संस्कारकमिदमालम्भनम्। तृतीयो यथा—"तप्ते पयसि दध्यानयति" इति। अत्र "सा वैश्वदेव्यामिक्षा" इति वाक्येन तच्छब्देन निर्दिश्य वैश्वदेवयागाङ्गत्वेन विनियोक्ष्यमाणं यत्पयस्तत्संस्कारकत्वात् विनियोक्ष्यमाणसंस्कारकं दध्यानयनम्। पशुपुरोडाशयागस्तूपयुक्तोपयोक्ष्यमाणदेवतासंस्कारार्थः, यागांशे अदृष्टार्थश्च। अत्र तत्संस्कार्याग्नीषोमदेवताया वपायागे उपयुक्तार्थत्वात्, हृदयाद्यङ्गयागेषु उपयोक्ष्यमाणत्वाच्च। स्विष्टकृद्यागो द्रव्यांशे देवतांशे चोपयुक्तसंस्कारार्थः, त्यागांशे अदृष्टार्थश्च। सूक्तवाकसाधनकं प्रहरणमपि तथैव। उत्तमप्रयाजो यक्ष्यमाणदेवतासंस्कारत्वात्तदंशे उपयोक्ष्यमाणसंस्कारः, इतरांशे अदृष्टार्थः। हृदयादिहविर्यागात्पूर्वं क्रियमाणो वसाहोमोऽपि वसांशे प्रतिपत्तिरितरांशे अदृष्टार्थ इत्याद्यूह्यम्।

केचित्तु—उपयोक्ष्यमाणसंस्काराभिन्नसंस्कारकर्म्मत्वं प्रतिपत्तिकर्मत्वम्। चतुरवत्तद्रव्यस्य होमेन भस्मीभूतस्य

होमे उपयोक्ष्यमाणत्वाभावात् तद्भिन्नत्वं होमेऽस्तीति लक्षणसङ्गतिरित्याहुः ।

अत्रायं विशेषः—अर्थकर्म्मणि द्रव्यापेक्षया कर्म्मणः प्राधान्यम्, कर्म्मणि द्रव्यस्य गुणत्वम् । यथा अग्निहोत्रादौ दव्यादेर्गुणत्वम् । गुणकर्म्मणि द्रव्यस्य प्राधान्यं, द्रव्ये च कर्म्मणो गुणत्वम् । व्रीहीन् प्रोक्षति अवहन्तीत्यादौ द्वितीयया व्रीहीणां क्रियासाध्यत्वप्रतीतेः क्रियापेक्षया द्रव्यस्य प्राधान्यं प्रोक्षणादिक्रियायास्तदपेक्षया गुणत्वमिति ।

पुनरपि गुणकर्म्म चतुर्विधम्—उत्पत्त्याप्तिविकृतिसंस्कृतिभेदात् । तत्रोत्पत्तिसंस्कारो यथा—"अग्नीनादधीत" इति । मन्त्रविशेषैः सम्भारेषु निधापिता अप्याहवनीयादय उत्पद्यन्त इत्याहवनीयाद्युत्पत्तिहेतुभूतसंस्कारजनकत्वात् आधानस्य उत्पत्तिसंस्कारत्वम् । आप्तिसंस्कारो यथा—"स्वाध्यायोऽध्येतव्य" इति । अध्ययनेन स्वाध्याय आप्यत इत्याप्तिसंस्कारोऽयम् । विकृतिर्यथा—"व्रीहीन् अवहन्ति" इति व्रीहिगतवैतुष्यरूपविकृतिजनकत्वादवहननं विकृतिसंस्कारः । संस्कृतिर्यथा "व्रीहीन्प्रोक्षति" इति । अत्राधानमध्ययनञ्च स्वतन्त्रं गुणकर्म्म न तु क्रत्वङ्गम् । प्रोक्षणादिकं सर्व्वं क्रत्वङ्गं गुणकर्मेति ध्येयम् ॥

अर्थकर्म्म त्रिविधम्—नित्यनैमित्तिककाम्यभेदात् । तत्र—"यावज्जीवमग्निहोत्रं जुहोति" "सायं जुहोति"

"प्रातर्जुहोति" इति जीवता पुरुषेण सायंप्रातःकालयोर्नियमेन कर्त्तव्यतया अवगतमग्निहोत्रादिकं नित्यम् । "अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्व्वपेत्" इति दर्शपूर्णमासातिपत्तिनिमित्तकपाथिकृदिष्ट्यादिकं नैमित्तिकम् ।

नित्यनैमित्तिकयोरकरणे प्रत्यवाय एव, कृते फलं नास्तीति केचित् ।

अन्ये तु दुरितनिवृत्तिः फलमस्ति—

नित्यनैमित्तिकैरेव कुर्व्वाणो दुरितक्षयम् ।

इत्यादिवाक्यैः प्रत्यवायनिवृत्तेः फलत्वेन श्रूयमाणत्वात् ।

नचैवं तयोरपि काम्यत्वापत्तिः फलवत्त्वादिति वाच्यम् । फलकामनापूर्व्वकानुष्ठानाभावात्, तत्तद्विधिवाक्ये फलकाममुद्दिस्य तदर्थफलसाधनत्वेन विधानाभावाच्च काम्यत्वानुपपत्तेः ।

काम्यमपि कर्म्म त्रिविधम्—केवलम् ऐहिकफलकम्, आमुष्मिकफलकम्, ऐहिकामुष्मिकफलकञ्चेति । तत्राद्यं यथा–कारीर्य्यादि । तत्तत्समयवर्त्तिशुष्यत्सस्यसञ्जीवनहेतुवृष्टिकामिना क्रियते, न कालान्तरभाविवृष्टिकामेन, जन्मान्तरीयवृष्टिकामेन वा ।

केवलामुष्मिकफलकं यथा–स्वर्गाद्यर्थदर्शपूर्णमासादिकम् । स्वर्गस्य इहलोकभोग्यत्वाभावात् ।

ऐहिकामुष्मिकसाधारणफलकं यथा–"वायव्यं श्वेतमालभेत भूतिकामः" इति भूत्यादिफलकमित्यन्यत्र विस्तरः ।

ननु दर्शपूर्णमासादिकर्म्मणां व्रीह्यादिद्रव्याणाञ्च प्रत्यक्षत्वेन लौकिकत्वात् कथं वेदस्यालौकिकार्थबोधकत्वमिति चेन्न । कर्म्मणां प्रत्यक्षत्वेऽपि तेषां स्वर्गादिफलसाधनत्वमप्रत्यक्षमिति 'तत्फलसाधनतया तत् कर्म कर्तव्यम्' इत्येवं फलसाधनतया कर्म्मकर्त्तव्यताबोधकस्य वेदस्यालौकिकार्थबोधकत्वात् । एवं व्रीह्यादीनां (१)यागादिक्रियासाधनत्वं न प्रत्यक्षवेद्यमिति तद्बोधकस्यापि वेदवाक्यस्यालौकिकार्थबोधकत्वमिति न दोषः ।

इदानीं विधिवाक्यस्य विधायकत्वप्रकारः कथ्यते ।

तत्र "स्वर्गकामो यजेत" इत्यत्र यजिधातोरुपरितने तप्रत्यये धर्म्मद्वयमस्ति—आख्यातत्वं लिङ्त्वं चेति । तत्र आख्यातत्वं सर्व्वलकारसाधारणं तदवच्छेदेन लिङ्प्रत्ययः पुरुषप्रवृत्तिरूपाम् आर्थभावनां प्रतिपादयति । सा चार्थभावना किं, केन, कथमिति अंशत्रयविशिष्टा । तथाहि—यजेत इत्यत्र प्रथमं प्रत्ययेन 'भावयेद्' इति प्रतीयते । सुबन्ताभिहितानां सर्व्वेषां कारकाणां तिङन्तार्थक्रियान्वयनियमे सति तिङन्तार्थस्य प्राधान्यात् । तत्र च प्रकृत्यर्थापेक्षया प्रत्ययार्थस्य प्राधान्यात् प्रथमं प्रत्ययार्थभावनाया उपस्थितिर्युक्ता । ततः करोति—समानार्थकभावयतेः सकर्म्मकत्वात् 'किम्भावयेत्' इति कर्म्माकाङ्क्षायां भिन्नपदोपात्तोऽपि स्वर्गो भाव्यत्वेनान्वेति । भाव्य-

(१) फलसाधनापूर्वसाधनत्वाकाराविशिष्टयागादिक्रियासाधनत्वमित्यर्थः ।

त्वेन कर्मत्वेनेत्यर्थः। साध्यत्वेनेति यावत्। न तु समानपदोपात्तोऽपि धात्वर्थो भाव्यत्वेनान्वेति। दुःखात्मकस्य यागस्य ईप्सिततमत्वरूपकर्मत्वायोग्यत्वात्। स्वर्गस्य स्वानन्दात्मकत्वेन ईप्सिततमतया कर्मत्वेनान्वयोग्यत्वात्। ततश्च 'स्वर्गं भावयेद्' इति बोधो भवति। ततः 'केन' इति करणाकाङ्क्षायां समानपदोपात्तो यागः करणत्वेनान्वेति—'यागेन स्वर्गं कुर्याद्' इति। ततः 'कथं यागेन स्वर्गं कुर्य्याद्' इति कथम्भावाकाङ्क्षायाम्—अग्न्यन्वाधानावहननादिजन्यदृष्टोपकारेण प्रयाजादिजनितादृष्टोपकारसहितेन यागेन स्वर्गं कुर्य्यादिति अग्न्यन्वाधानप्रयाजादिकमङ्गजातम् इतिकर्त्तव्यतात्वेनाऽन्वेति। कथम्भावाकाङ्क्षापूरकत्वमितिकर्त्तव्यतात्वम्। यथा—'ओदनकामः पचेत्' इत्यत्र लिङा भावना प्रतीयते, किं भावयेदित्याकाङ्क्षायाम् ओदनो भाव्यत्वेनान्वेति, केनेत्याकाङ्क्षायां पाकेनेति लभ्यते, कथमित्याकाङ्क्षायां तृणफूत्कारसहितेनेति। ततश्च तृणफूत्काराद्युपकृतेन पाकेन (तेजःसंयोगेन) ओदनम्भावयेदिति वाक्यार्थः सम्पद्यते तद्वद्वेदेऽपि बोध्यम्।

स एव लिङ्प्रत्ययो लिङ्त्वावच्छेदेन शब्दभावनां प्रेरणाख्यामभिधत्ते। लोकेऽपि "गामानय" इत्याचार्य्यवाक्यश्रवणानन्तरम् 'अयमाचार्यो माङ्गवानयने प्रेरयति' इतिप्रेरणाख्यव्यापारं ज्ञात्वैव शिष्यो गवानयने प्रवर्त्तत इत्यन्वयव्यतिरेकाभ्यां प्रेरणाज्ञानं प्रवृत्तिकारणम्। प्रेर-

